कर्मनाशेति । यदि ह्यपूर्वं न स्यात्तदा कर्मनाशाजलस्पर्शादिना नाश्यत्वं धर्मस्य न स्यात्, नहि तेन यागादेर्नाशः प्रतिबन्धो वा कर्तुं शक्यते तस्य पूर्वमेव वृत्तत्वादिति भावः। एतेन देवताप्रीतेरेव फलत्वमित्यपास्तम् । गङ्गास्नानादौ सर्वत्र देवताप्रीतेरसंभवाच्च। देवतायाश्चेतनत्वेऽपि तत्प्रीतेरनुद्देश्यत्वात् । प्रीतेः सुखस्वरूपत्वेन विष्णुप्रीत्यादौ तदसंभवात् । जन्यसुखादेस्तत्राभावात् । तेन विष्णुप्रीतिजन्यत्वेन पराभिमतस्वर्गादिरेव विष्णुप्रीतिशब्देन लक्ष्यते ॥ १६१ ॥ १६२ ॥

अधर्मो नरकादीनां हेतुर्निन्दितकर्मजः ।

अधर्म इति । नरकादिसकलदुःखानां नारकीयशरीरादीनां च साधनमधर्म इत्यर्थः ॥

तत्र प्रमाणमाह—

प्रायश्चित्तादिनाश्योऽसौ जीववृत्ती त्विमौ गुणौ ॥१६३॥

प्रायश्चित्तेति । यदि ह्यधर्मो न स्यात्तदा प्रायश्चित्तादिनाश्यत्वं न स्यात् । नहि तेन ब्रह्महननादीनां नाशः प्रतिबन्धो वा विधातुं शक्यते । तस्य पूर्वमेव विनष्टत्वादिति भावः ॥ जीवेति । ईश्वरस्य धर्माधर्माभावादिति भावः ॥१६३॥

इमौ तु वासनाजन्यौ ज्ञानादपि विनश्यतः ।

इमौ धर्माधर्मौ । वासनेति । अतो ज्ञानिना कृते अपि सुकृतदुष्कृतकर्मणी न फलायालमिति भावः ॥ ज्ञानादपीति । अपिना भोगपरिग्रहः । ननु तत्त्वज्ञानस्य कथं धर्माधर्मनाशकत्वं 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इति वचनविरोधात् , इत्थं च तत्त्वज्ञानिनां झटिति कायव्यूहेन सकलकर्मणां भोगेन क्षय इति चेत् । न । तत्र भोगस्य वेदबोधितनाशकोपलक्षकत्वात् । कथमन्यथा प्रायश्चित्तादिना कर्मणां नाशः तदुक्तम्—'ज्ञानाग्निः सर्वकर्माणि' इत्यादिना । 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ।' इति । ननु तत्त्वज्ञानिनस्तर्हि शरीरावस्थानं सुखदुःखादि च न स्याज्ज्ञानेन च सर्वेषां कर्मणां नाशादिति चेत् । न । प्रारब्धेतरकर्मणामेव नाशात् । तत्तच्छरीरभोगजनकं हि यत्कर्म तत्प्रारब्धं तदभिप्रायमेव नाभुक्तमिति वचनमिति ॥

शब्दं निरूपयति—

शब्दो ध्वनिश्च वर्णश्च मृदङ्गादिभवो ध्वनिः ॥ १६४ ॥
कण्ठसंयोगादिजन्या वर्णास्ते कादयो मताः ।
सर्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते ॥ १६५ ॥

---

१ ननु गङ्गादिदर्शनादिना ईश्वरे कुतो न धर्मादेरुत्पत्तिरत आह—वासनाजन्याविति । ईश्वरे मिथ्याज्ञानजन्यवासनाविरहान्न धर्मादेरुत्पत्तिरिति भाव । २ कर्मजन्याऽदृष्टानीत्यर्थः । ३ स्मृतिं दर्शयित्वा श्रुतिं दर्शयति—क्षीयन्त इति ।

वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्तिता ।

शब्द इति । नभोवृत्तिराकाशसमवेतः । दूरस्थशब्दस्याग्रहणादाह–श्रोत्रेति । ननु मृदङ्गाद्यवच्छेदेनोत्पन्ने शब्दे श्रोत्रे कथमुत्पत्तिरत आह—वीचीति । आद्यशब्देन बहिर्दशदिगवच्छिन्नोऽन्यः शब्दस्तेनैव शब्देन जन्यते । तेन चापरस्तद्व्यापकः । एवं क्रमेण श्रोत्रोत्पन्नो गृह्यत इति ॥

कदम्बगोलकन्यायादुत्पत्तिः कस्यचिन्मते ॥ १६६ ॥

कदम्बेति । आद्यशब्दाद्दशदिक्षु दश शब्दा उत्पद्यन्ते । तैश्चान्ये दशशब्दा उत्पद्यन्त इति भावः । अस्मिन्मते गौरवादुक्तं—कस्यचिन्मत इति॥६४॥६५॥६६॥

ननु शब्दस्य नित्यत्वादुत्पत्तिकथनमसंगतमत आह—

उत्पन्नः को विनष्टः क इति बुद्धेरनित्यता ।

उत्पन्न इति । शब्दानामुत्पादविनाशप्रत्ययशालित्वादनित्यत्वमित्यर्थः ॥

ननु स एवायं ककार इत्यादिप्रत्यभिज्ञानाच्छब्दानां नित्यत्वम्, इत्थं चोत्पादविनाशबुद्धिर्भ्रमरूपैवेत्यत आह—

सोऽयं क इति बुद्धिस्तु साजात्यमवलम्बते ॥ १६७ ॥

सोऽयं क इति ॥ साजात्यमिति । तत्र प्रत्यभिज्ञानस्य तत्सजातीयत्वं विषयो न तु तद्व्यक्त्यभेदो विषयः । उक्तप्रतीतिविरोधात् । इत्थंच द्वयोरपि[1] प्रतीत्योर्न भ्रमत्वमिति ॥ १६७ ॥

ननु सजातीये सोऽयमिति प्रत्यभिज्ञा कुत्र दृष्टेत्यत आह—

तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात् ।
तस्मादनित्या एवेति वर्णाः सर्वे मतं हि नः ॥ १६८ ॥

इति श्रीविश्वनाथपञ्चाननभट्टाचार्यकृता कारिकावली समाप्ता ॥

तदेवेति । यदौषधं मया कृतं तदौषधमन्येनापि कृतमित्यादिदर्शनादिति भावः ॥ १६८ ॥

इति श्रीमहामहोपाध्याय-विद्यानिवासभट्टाचार्यसुत-श्रीविश्वनाथपञ्चाननभट्टाचार्य-विरचितायां सिद्धान्तमुक्तावल्यां गुणनिरूपणम् ॥

॥ समाप्तोऽयं ग्रन्थः ॥

---

१ उत्पादप्रतीति–प्रत्यभिज्ञानयोरित्यर्थ । २ अत्र स्वकर्तृकत्वस्वभिन्नकर्तृकत्वरूपविरुद्धधर्माध्यासायितभेदप्रत्ययस्य प्रतिबन्धकस्य सत्त्वान्न व्यक्त्यभेदो विषयः, किंतु तत्सजातीयाभेदो विषय इति भाव. ।